॥ भक्तामरस्तोत्र ॥

भक्तामर-प्रणत-मौलिमणि-प्रभाणा -
मुद्योतकं दलित-पाप-तमोवितानम् ।
सम्यक् प्रणम्य जिन पादयुगं युगादा-
वालंबनं भवजले पततां जनानाम्॥ १॥

यः संस्तुतः सकल-वाङ्मय- तत्व-बोधा-
द्-उद्भूत- बुद्धिपटुभिः सुरलोकनाथैः।
स्तोत्रैर्जगत्त्रितय चित्त-हरैरुदरैः
स्तोष्ये किलाहमपि तं प्रथमं जिनेन्द्रम्॥ २॥

बुद्ध्या विनाऽपि विबुधार्चित पादपीठ
स्तोतुं समुद्यत मतिर्विगतत्रपोऽहम् ।
बालं विहाय जलसंस्थितमिन्दु बिम्ब -
मन्यः क इच्छति जनः सहसा ग्रहीतुम् ॥ ३॥

वक्तुं गुणान् गुणसमुद्र शशाङ्क्कान्तान्
कस्ते क्षमः सुरगुरुप्रतिमोऽपि बुद्ध्या ।
कल्पान्त - काल् - पवनोद्धत - नक्रचक्रं
को वा तरीतुमलमम्बुनिधिं भुजाभ्याम् ॥ ४॥

सोऽहं तथापि तव भक्ति वशान्मुनीश
कर्तुं स्तवं विगतशक्तिरपि प्रवृत्तः ।
प्रीत्यऽऽत्मवीर्यमविचार्य मृगो मृगेन्द्रं
नाभ्येति किं निजशिशोः परिपालनार्थम् ॥ ५॥

अल्पश्रुतं श्रुतवतां परिहासधाम्
त्वद्भक्तिरेव मुखरीकुरुते बलान्माम् ।
यत्कोकिलः किल मधौ मधुरं विरौति
तच्चारुचूत - कलिकानिकरैकहेतु ॥ ६॥

त्वत्संस्तवेन भवसंतति - सन्निबद्धं
पापं क्षणात् क्षयमुपैति शरीर भाजाम्।
आक्रान्त - लोकमलिनीलमशेषमाशु
सूर्यांशुभिन्नमिव शार्वरमन्धकारम् ॥ ७॥

मत्वेति नाथ! तव् संस्तवनं मयेद -

मारभ्यते तनुधियापि तव प्रभावात् ।
चेतो हरिष्यति सतां नलिनीदलेषु
मुक्ताफल - द्युतिमुपैति ननूदबिन्दुः ॥ ८॥

आस्तां तव स्तवनमस्तसमस्त - दोषं
त्वत्संकथाऽपि जगतां दुरितानि हन्ति ।
दूरे सहस्रकिरणः कुरुते प्रभैव
पद्माकरेषु जलजानि विकाशभांजि ॥ ९॥

नात्यद्-भूतं भुवन-भुषण भूतनाथ
भूतैर गुणैर्-भुवि भवन्तमभिष्टुवन्तः
तुल्या भवन्ति भवतो ननु तेन किं वा
भूत्याश्रितं य इह नात्मसमं करोति ॥ १०॥

दृष्टवा भवन्तमनिमेष-विलोकनीयं
नान्यत्र तोषमुपयाति जनस्य चक्षुः ।
पीत्वा पयः शशिकरद्युति दुग्ध सिन्धोः
क्षारं जलं जलनिधेरसितुं क इच्छेत् ॥ ११॥

यैः शान्तरागरुचिभिः परमाणुभिस्तवं
निर्मापितस्त्रिभुवनैक ललाम-भूत।
तावन्त एव खलु तेऽप्यणवः पृथिव्यां
यत्ते समानमपरं न हि रूपमस्ति ॥ १२॥

वक्त्रं क्व ते सुरनरोरगनेत्रहारि
निःशेष - निर्जित-जगत् त्रितयोपमानम् ।
बिम्बं कलङ्क-मलिनं क्व निशाकरस्य
यद्वासरे भवति पांडुपलाशकल्पम् ॥ १३॥

सम्पूर्णमण्ङल - शशाङ्ककलाकलाप्
शुभ्रा गुणास्त्रिभुवनं तव लंघयन्ति ।
ये संश्रितास्-त्रिजगदीश्वर नाथमेकं
कस्तान्-निवारयति संचरतो यथेष्टम् ॥ १४॥

चित्रं किमत्र यदि ते त्रिदशांगनाभिर्-
नीतं मनागपि मनो न विकार - मार्गम् ।
कल्पान्तकालमरुता चलिताचलेन
किं मन्दराद्रिशिखिरं चलितं कदाचित् ॥ १५॥

निर्धूमवर्तिपवर्जित - तैलपूरः
कृत्स्नं जगत्त्रयमिदं प्रकटी-करोषि ।
गम्यो न जातु मरुतां चलिताचलानां
दीपोऽपरस्त्वमसि नाथ् जगत्प्रकाशः ॥ १६॥

नास्तं कादाचिदुपयासि न राहुगम्यः
स्पष्टीकरोषि सहसा युगपज्जगन्ति ।
नाम्भोधरोदर - निरुद्धमहाप्रभावः
सूर्यातिशायिमहिमासि मुनीन्द्र! लोके ॥ १७॥

नित्योदयं दलितमोहमहान्धकारं
गम्यं न राहुवदनस्य न वारिदानाम् ।
विभ्राजते तव मुखाब्जमनल्प कान्ति
विद्योतयज्जगदपूर्व - शशाङ्कबिम्बम् ॥ १८॥

किं शर्वरीषु शशिनाऽह्नि विवस्वता वा
युष्मन्मुखेन्दु - दलितेषु तमस्सु नाथ
निष्मन्न शालिवनशालिनि जीव लोके
कार्यं कियज्जलधरैर् - जलभार नम्रैः ॥ १९॥

ज्ञानं यथा त्वयि विभाति कृतावकाशं
नैवं तथा हरिहरादिषु नायकेषु
तेजः स्फुरन्मणिषु याति यथा महत्वं
नैवं तु काच - शकले किरणाकुलेऽपि ॥ २०॥

मन्ये वरं हरि-हरादय एव दृष्टा
दृष्टेषु येषु हृदयं त्वयि तोषमेति ।
किं वीक्षितेन भवता भुवि येन नान्यः
कश्चिन्मनो हरति नाथ! भवान्तरेऽपि ॥ २१॥

स्त्रीणां शतानि शतशो जनयन्ति पुत्रान्
नान्या सुतं त्वदुपमं जननी प्रसूता।
सर्वा दिशो दधति भानि सहस्ररश्मिं
प्राच्येव दिग् जनयति स्फुरदंशुजालं ॥ २२॥

त्वामामनन्ति मुनयः परमं पुमांस-
मादित्यवर्णममलं तमसः परस्तात् ।

त्वामेव सम्यगुपलभ्य जयंति मृत्युं
नान्यः शिवः शिवपदस्य मुनीन्द्र! पन्थाः ॥ २३॥

त्वामव्ययं विभुमचिन्त्यमसंख्यमाद्यं
ब्रह्माणमीश्वरमनन्तमनंगकेतुम्
योगीश्वरं विदितयोगमनेकमेकं
ज्ञानस्वरूपममलं प्रवदन्ति सन्तः ॥ २४॥

बुद्धस्त्वमेव विबुधार्चित बुद्धि बोधात्,
त्वं शंकरोऽसि भुवनत्रय शंकरत्वात् ।
धाताऽसि धीर ! शिवमार्ग-विधेर्विधानात्,
व्यक्तं त्वमेव भगवन्! पुरुषोत्तमोऽसि ॥ २५॥

तुभ्यं नमस्त्रिभुवनार्तिहराय नाथ ।
तुभ्यं नमः क्षितितलामलभूषणाय ।
तुभ्यं नमस्त्रिजगतः परमेश्वराय,
तुभ्यं नमो जिन ! भवोदधि शोषणाय ॥ २६॥

को विस्मयोऽत्र यदि नाम गुणैरशेषैस् -
त्वं संश्रितो निरवकाशतया मुनीश!
दोषैरूपात्त विविधाश्रय जातगर्वैः,
स्वप्नान्तरेऽपि न कदाचिदपीक्षितोऽसि ॥ २७॥

उच्चैरशोक-तरुसंश्रितमुन्मयूख-
माभाति रूपममलं भवतो नितान्तम् ।
स्पष्टोल्लसत्किरणमस्त-तमोवितानं
बिम्बं रवेरिव पयोधर पार्श्ववर्ति ॥ २८॥

सिंहासने मणिमयूखशिखाविचित्रे,
विभ्राजते तव वपुः कनकावदातम् ।
बिम्बं वियद्विलसदंशुलता - वितानं,
तुंगोदयाद्रि - शिरसीव सहस्ररश्मेः ॥ २९॥

कुन्दावदात - चलचामर - चारुशोभं,
विभ्राजते तव वपुः कलधौतकान्तम् ।
उद्यच्छशांक - शुचिनिर्झर - वारिधार-,
मुच्चैस्तटं सुर गिरेरिव शातकौम्भम् ॥ ३०॥

छत्रत्रयं तव विभाति शशांककान्त-
मुच्चैः स्थितं स्थगित भानुकर - प्रतापम् ।
मुक्ताफल - प्रकरजाल - विवृद्धशोभं,
प्रख्यापयत्त्रिजगतः परमेश्वरत्वम् ॥ ३१॥

गम्भीरतारवपूरित - दिग्विभागस्-
त्रैलोक्यलोक - शुभसंगम भूतिदक्षः ।
सद्धर्मराजजयघोषण - घोषकः सन्,
खे दुन्दुभिर्ध्वनति ते यशसः प्रवादी ॥ ३२॥

मन्दार - सुन्दरनमेरू - सुपारिजात
सन्तानकादिकुसुमोत्कर-वृष्टिरुद्धा ।
गन्धोदबिन्दु - शुभमन्द - मरुत्प्रपाता,
दिव्या दिवः पतित ते वचसां ततिर्वा ॥ ३३॥

शुम्भत्प्रभावलय - भूरिविभा विभोस्ते,
लोकत्रये द्युतिमतां द्युतिमाक्षिपन्ती ।
प्रोद्यद्-दिवाकर - निरन्तर भूरिसंख्या
दीप्त्या जयत्यपि निशामपि सोम-सौम्याम् ॥ ३४॥

स्वर्गापवर्गगममार्ग - विमार्गणेष्टः,
सद्धर्मतत्वकथनैक - पटुस्त्रिलोक्याः ।
दिव्यध्वनिर्भवति ते विशदार्थसत्व
भाषास्वभाव - परिणामगुणैः प्रयोज्यः ॥ ३५॥

उन्निद्रहेम - नवपंकज - पुंजकान्ती,
पर्युल्लसन्नखमयूख-शिखाभिरामौ ।
पादौ पदानि तव यत्र जिनेन्द्र ! धत्तः
पद्मानि तत्र विबुधाः परिकल्पयन्ति ॥ ३६॥

इत्थं यथा तव विभूतिरभूज्जिनेन्द्र,
धर्मोपदेशनविधौ न तथा परस्य ।
यादृक् प्रभा दिनकृतः प्रहतान्धकारा,
तादृक्-कुतो ग्रहगणस्य विकाशिनोऽपि । ३७॥

श्च्योतन्मदाविलविलोल-कपोलमूल
मत्तभ्रमद्-भ्रमरनाद - विवृद्धकोपम् ।
ऐरावताभमिभमुद्धतमापतन्तं

दृष्ट्वा भयं भवति नो भवदाश्रितानाम् ॥ ३८॥

भिन्नेभ - कुम्भ - गलदुज्जवल - शोणिताक्त,
मुक्ताफल प्रकर - भूषित भुमिभागः ।
बद्धक्रमः क्रमगतं हरिणाधिपोऽपि,
नाक्रामति क्रमयुगाचलसंश्रितं ते ॥ ३९॥

कल्पांतकाल - पवनोद्धत - वह्निकल्पं,
दावानलं ज्वलितमुज्जवलमुत्स्फुलिंगम् ।
विश्वं जिघत्सुमिव सम्मुखमापतन्तं,
त्वन्नामकीर्तनजलं शमयत्यशेषम् ॥ ४०॥

रक्तेक्षणं समदकोकिल - कण्ठनीलं,
क्रोधोद्धतं फणिनमुत्फणमापतन्तम् ।
आक्रामति क्रमयुगेन निरस्तशंकस्-
त्वन्नाम नागदमनी हृदि यस्य पुंसः ॥ ४१॥

वल्गत्तुरंग गजगर्जित - भीमनाद-
माजौ बलं बलवतामपि भूपतिनाम् !
उद्यद्दिवाकर मयूख - शिखापविद्धं,
त्वत्-कीर्तनात् तम इवाशु भिदामुपैति ॥ ४२॥

कुन्ताग्रभिन्नगज - शोणितवारिवाह
वेगावतार - तरणातुरयोध - भीमे ।
युद्धे जयं विजितदुर्जयजेयपक्षास्-
त्वत्पाद पंकजवनाश्रयिणो लभन्ते ॥ ४३॥

अम्भौनिधौ क्षुभितभीषणनक्रचक्र-
पाठीन पीठभयदोल्बणवाडवाग्नौ
रंगत्तरंग - शिखरस्थित - यानपात्रास्-
त्रासं विहाय भवतःस्मरणाद् व्रजन्ति ॥ ४४॥

उद्भूतभीषणजलोदर - भारभुग्नाः
शोच्यां दशामुपगताश्च्युतजीविताशाः ।
त्वत्पादपंकज-रजोऽमृतदिग्धदेहा,
मर्त्या भवन्ति मकरध्वजतुल्यरूपाः ॥ ४५॥

आपाद - कण्ठमुरूशृंखल - वेष्टितांगा,

गाढं बृहन्निगडकोटिनिघृष्टजंघाः ।
त्वन्नाममंत्रमनिशं मनुजाः स्मरन्तः,
सद्यः स्वयं विगत-बन्धभया भवन्ति ॥ ४६॥

मत्तद्विपेन्द्र - मृगराज - दवानलाहि
संग्राम - वारिधि - महोदर-बन्धनोत्थम् ।
तस्याशु नाशमुपयाति भयं भियेव,
यस्तावकं स्तवमिमं मतिमानधीते ॥ ४७॥

स्तोत्रस्त्रजं तव जिनेन्द्र ! गुणैर्निबद्धां,
भक्त्या मया विविधवर्णविचित्रपुष्पाम् ।
धत्ते जनो य इह कंठगतामजस्रं,
तं मानतुंगमवशा समुपैति लक्ष्मीः ॥ ४८॥

लिपिकार अशोक सेठी, संशोधक यशवंत मलैया